ದ್ವೀಪಾಂತರ ಸಂಸ್ಕೃತ ವಿಜ್ಞಾನಮ್ :

ಬಾಲಿದ್ವೀಪಲಬ್ಧಂ-ಪ್ರಾಚೀನಂ

# ಅಕ್ಷರ ರಾಮಾಯಣಮ್

## ಕವಿಜಾನಕೀಯಂ


ಸಂಪಾದನಂ ಪರಿಷ್ಕರಣಂ

**ಅರೆಯೂರ್ ಶ್ರೀರಾಮಶರ್ಮಾ**

ಉಭಯನ್ಯಾಯವೇದಾಂತಾಲಂಕಾರಃ – ಪಂಚಭಾಷಾವಲ್ಲಭಃ

ಇಸವಿ ೧೯೯೪ —

ಪ್ರಾಂಶುಪಾಲಃ

ಸರ್ಕಾರೀಯ ಸಂಸ್ಕೃತಕಾಲೇಜಃ – ಮೇಲುಕೋಟೆ 571 431



ಪ್ರಕಾಶಕರು :

ಭಾರತ ಸಂಸ್ಕೃತಿ ಪ್ರಸಾರ ಯೋಜನೆ,

91, ಧರ್ಮಶ್ರೀ, ಶಂಕರಪುರ, ಬೆಂಗಳೂರು-560 004

ದೂರವಾಣಿ : 6 60 46 41

ಮುದ್ರಕರು :

ಭಾರತ ದರ್ಶನ ಮುದ್ರಣಾಲಯ,

ಬೆಂಗಳೂರು-28 ದೂರವಾಣಿ : 6 60 53 81

ಬೆಲೆ : ಒಂದು ರೂಪಾಯಿ.

ॐ

बालिद्वीपलब्धं प्राचीनं

# अक्षररामायणम्

बेङ्गलूरु विश्वसंस्कृतसम्मेलने
वितीर्णम्

## कविजानकीयम्

सम्पादकः - परिष्कारकः - प्रकाशकश्च

**अरैयर् श्रीरामशर्मा**

उभयन्यायवेदान्तालङ्कारः

पञ्चभाषाकवितावल्लभः

प्रांशुपालः

सर्वकारीयसंस्कृतकालेजः मेलुकोटे 571 431 पि.नं.

रोहिणी - पत्रिका 1995-96 



## बालिद्वीपलब्धं प्राचीनं

# अक्षररामायणम्

## कविजानकीयम्

श्री डा. कुटुम्बशास्त्रि महोदयेभ्यः सादरं समर्पितम्

सम्पादकः - परिष्कारकः - प्रकाशकश्च

**अरैयर् श्रीरामशर्मा**

उभयन्यायवेदान्तालङ्कारः

पञ्चभाषाकवितावल्लभः

ई 2011

प्रांशुपालः

सर्वकारीयसंस्कृतकालेजः मेलुकोटे ५७१ ४३१ पि.नं.

रु. 15 - 00

# मुखवाणी

भारतवर्षस्य प्राचीनेषु उपद्वीपेषु इदानीं इण्डोनेष्याख्येषु बालिद्वीपः 'बलिद्वीप' इति पूर्वं प्रसिद्ध आसीत् । तत्र प्रायः सार्धसहस्रवर्षेभ्यः पूर्वं कर्णाटराजस्य श्रीधर्मस्य आधिपत्यं आसीत् इति ज्ञायते । किञ्च शैव-वैष्णव-शाक्त-बौद्धादीनां संस्कृतभाषात्मकः व्यवहारः अत्यन्तं उत्तमः आसीत् इति च प्रचीनताळपत्र-पाण्डुलिपिपत्र-खण्डादिभिः ज्ञायते । बरोडामहाराजेन गायकवाडेन स्वकीयपुस्तकभाण्डागारात् प्राचीनाः खण्डत्रुटिताः श्लोकाः टिप्पन्यश्च 'बालिद्वीपग्रन्थाः' इति संग्राह्य प्रकाशिताः सन्ति । तेषु 'कविजानकी' इति नाम्ना स्थिताः खण्डाः त्रुटिताश्च सावधानं परिष्कृत्य, 'अक्षररामायणम्' इति नाम्ना अत्र प्रकाश्यन्ते । अत्र ओं श्रीपूर्वकैः पञ्चाशद्वर्णमालाक्षरैः आरब्धैः श्लोकैः रामायणकथासंग्रहोऽपि बालानां अत्यन्तं उपयोगाय भवति । ऌ ॡ ङ ञ ट ठ ढ ण अक्षराणां लिपिसुन्दराणां उपमानानां निरूपणेन, 'अं अः' इत्यादीनां फलितवर्णरूपेण उकारस्य ह्रस्व-दीर्घ-प्लुत-संवादेन लकारत्रयप्रयोगेण च उपयोगचमत्कारः रमणीयोऽस्ति । कविश्च जानकीनाम्नी राजसंबधिनी पण्डिता च इति ज्ञायते । खण्डत्रुटितानां संयोजनेन कवेरभिप्रायानुसारेण परिष्कारेण च 'अक्षररामायणं' इदं सम्पादितं संस्कृतशिक्षाभ्यासपराणां सर्वेषां प्रमोदाय भवति । द्वीपान्तसंस्कृतभाषाविज्ञानसंशोधकानां च उपयोगाय भवति ।

संभग्रसन्धानकला प्रशस्ता प्रत्यायनी चापि विनष्टकानाम् ।
प्रचीनभावानुविवर्तनी सा काव्येषु भाव्या सुधियां महिम्ना ।।

**अरैयर् श्रीरामशर्मा रामानुजदासानुदासः**

24-2-1996

## बालिद्वीपप्रसिद्धम्

# अक्षररामायणम्

## कविः - जानकी

ओम् रामलक्ष्मणौ भ्रातरौ नमस्कृत्वा सितासितौ ।
वने तस्मिन् विचरन्तौ सीतां च जनकात्मजाम् ।। १

श्रीः धन्यं मंगल्यमायुष्यं अलक्ष्मीकलिनाशनम् ।
रामायणं प्रवक्ष्यामि मातृकाक्षरयोजितम् ।। २

अ अयोध्याधिपतेः पुत्राः चत्वारस्सूर्यवर्चसः ।
राम-लक्ष्मण-शत्रुघ्नाः भरतश्च महाबलः ।। ३

आ आचारविनयोपेताः सत्यसन्धा दृढव्रताः ।
शूरास्सत्यप्रतिज्ञाश्च सर्वे दशरथात्मजाः ।। ४

इ अिङ्गितेन तु कैकेय्याः स्वपुत्रहितकाम्यया ।
दृढव्रतो राज्ञ इष्टो रामस्संप्रस्थितो वनम् ।। ५

ई अीहितेनाभिषेकेन रामस्संप्रस्थितो वनम् ।
सीता चानुगता साध्वी लक्ष्मणश्च महाबलः ।। ६

उ१ उपवासपरो रामः तपस्वी दण्डके वने ।
सभार्यस्सभ्रातृकश्च चचार मुनिभिस्स्तुतः ।। ७

ऊ२ ऊनशूर्पणखादोषात् रामस्य च पराक्रमात् ।
तत्र पाराभवः कालो राक्षसानामुपस्थितः ।। ८

ऊ३ ऊनस्तु रामवीर्येण रावणो नाम राक्षसः ।
तेन दुष्टात्मना सीता छलेनापहृता वने ।। ९

ॠ ऋषिधर्मसमायुक्तं मारीचं नाम मातुलम् ।
आगम्य रावणः पापः ततस्तद्वाक्यमब्रवीत् ।। १०

ॠ कृतिं कृत्वा छलेन त्वं दूरं गच्छ वनेषु मे ।
दशरथात्मजं हत्वाऽरामं तत्र करोम्यहम् ।। ११

ऌ लोम्ना काञ्चनरूपेण मृगो भूत्वा स शृंगलृः ।
लोभयित्वा तु वैदेहीं व्यहरद् दण्डकावने ।। १२

ॡ सीतां कमलपत्राक्षीं उपासीनां वने तदा ।
ॡकारकुटिलो हत्वा रावणोऽगान्नभस्तलम् ।। १३

ऐ एतस्मिन्नन्तरे गृध्रो जटायुर्नाम धार्मिकः ।
तेन ताभ्यां समाख्यातं सीतायाः परिमार्गणे ।। १४

ऐ ऐश्वर्य-मद-मत्तेन रावणेन खगाधिपम् ।
हत्वा तस्मिन् वने गृध्रं सीता लङ्कां प्रवेशिता ।। १५

ओ ओघशोकनिमग्नस्सः सीतावत्सलराघवः ।
कपिना हीनराज्येन सुग्रीवेण समागतः ।। १६

औ औषधं परमं प्राप्तः सुग्रीवो रामदर्शनात् ।
हत्वा च वालिनं रामः सुग्रीवं चाभ्यषेचयत् ।। १७

अम् महाकपिं हनूमन्तं सत्यसन्धं दृढव्रतम् ।
सुग्रीवः प्रेषयामास सीतायाः परिमार्गणे ।। १८

अः हनूमान् वानरश्रेष्ठो जाम्बवान् कृतनिश्चयः ।
तारेयः कपिभिस्सार्धं भ्रमन्तो दक्षिणां दिशम् ।। १९

क कथयन्तस्स्ववृत्तान्तं कुत्रचित् कालपर्ययात् ।
अलब्ध्वाऽन्तश्च वैदेहीं चक्रुः प्रायोपवेशनम् ।। २०

ख खगस्तु सिद्धकार्यार्थः सम्पातो नाम धार्मिकः ।
तेन तेषां समाख्यातं सीतायाः परिमार्गणे ।। २१

ग गत्वा पारं समुद्रस्य वेगेन गरुडो यथा ।
दृष्ट्वा लंकां च नगरीं सीतां च जनकात्मजाम् ।। २२

घ घनेऽशोकवने देशे समागत्य स मैथिलीम् ।
हनूमान् लब्धसन्देशो राक्षसान् विन्यसूदयत् ।। २३

ङ ङकारसदृशीं कृत्वा ललाटे भृकुटिं तथा ।
क्रुद्धेनेन्द्रजिता धीरो गृहीतो हनुमान् कपिः ।। २४

च चन्द्रमण्डलसंकाशं लांगुलं तस्य राक्षसाः ।
शुक्लैरावेष्टितं वस्त्रैः तैलाभ्यङ्गमदीपयन् ।। २५

छ छलयित्वा ततस्सर्वान् राक्षसान् विपुलो हरिः ।
लांगूलेन प्रदीप्तेन लंकामादीपयत् पुरीम् ।। २६

ज जलमध्ये स निर्वाप्य लाङ्गूलं प्लवगेश्वरः ।
कृतामयं पुरं दग्ध्वा पुनरागमनोत्सुकः ।। २७

झ झषालयं समुत्प्लुत्य हरिरुत्तम आगतः ।
सिद्धकार्योऽतित्वरितः प्रदेशं यत्र राघवः ।। २८

ञ ञकारवदनो भूत्वा हनूमान् स हरीश्वरः ।
न्यवेदयदशेषेण राघवाय महात्मने ।। २९

ट टकारसदृशं चापं सशरं रघुनन्दनः ।
गृहीत्वा प्रस्थितस्तूर्णं सीतायाः परिमार्गणे ।। ३०

ठ ठकाराकारनेत्राणां हरीणामयुतव्रताः ।
सुग्रीवस्याग्रतो यान्ति प्रीताः कर्तव्यलालसाः ।। ३१

ड डयन्त इव वेगेन गत्वा पारं महोदधेः ।
राघवश्शरमुद्यम्य पश्चात्तत्रोपयाचितः ।। ३२
ढ ढकारसदृशीं कृत्वा ललाटे भ्रुकुटीं तदा ।
हनुमानग्रतो याति राघवस्य हिते रतः ।। ३३
ण णकारसदृशैः पद्मैः प्रांजलिः प्रत्युपस्थितः ।
उवाच सागरो रामं सेतुं मम जले कुरु ।। ३४
त तस्य तद्वचनं श्रुत्वा सुग्रीवो नळमब्रवीत् ।
नळ! भद्रं कुरुष्व त्वं सेतुं तत्र महार्णवे ।। ३५
थ स्थूलं मृष्टोपमं दिव्यं विश्वकर्मसुतो नलः ।
चकार सेतुं धर्मात्मा सागरे मकरालये ।। ३६
द दशयोजनविस्तीर्णं आयतं शतयोजनम् ।
येन वानरसेनाऽगात् समुत्पत्य महोदधिम् ।। ३७
ध धनुर्वीर्यं समाश्रित्य राघवस्सह वानरैः ।
राक्षसान् योधयामास क्रोधसंरक्तलोचनः ।। ३८
न नगर्यां मोघयुद्धायां रावणस्सह राक्षसैः ।
ततो द्वाराद् विनिष्क्रम्य चकारायोधनं महत् ।। ३९
प पनसश्शरभो मैन्दो नीलो मारुतिरङ्गदः ।
नानावृक्षैश्शिलाभिश्च राक्षसान् विन्यसूदयन् ।। ४०
फ फलितैः पादपैः कूले रोषिताश्शक्तितोमरैः ।
राक्षसाः खण्डनं चक्रुः वानराणां चमूमुखे ।। ४१
ब बलवान् राघवश्श्रीमान् दशग्रीवं जघान सः ।
निहतं रावणं दृष्ट्वा विभीषणमथाब्रवीत् ।। ४२

भ भक्तोऽसि मयि रक्षेन्द्र! धार्मिकश्चापि सुव्रतः ।
अराक्षसमिदं कर्म कृतं तुष्टोऽस्मि ते विभो! ।। ४३

म मया दत्तं राज्यमिदं भुङ्क्ष्व पूलस्त्यनन्दन!
सपुत्रभृत्यानुचरो भुङ्क्ष्व राज्यमकण्टकम् ।। ४४

य यदर्थमयमारम्भः कृतो मे राक्षसेश्वर!
तामहं द्रष्टुमिच्छामि गच्छ त्वं सहलक्ष्मणः ।। ४५

र रक्तः प्रियहिते युक्तो लक्ष्मणेन विभीषणः ।
आरोचयच्च वैदेहीं काकुत्स्थाय महात्मने ।। ४६

ल लङ्कां प्रविश्य नगरीं ददर्श जनकात्मजाम् ।
कृशां विवर्णां मलिनां दर्शयामास सुप्रियाम् ।। ४७

व वरारोहां तदा दृष्ट्वा रामश्चिन्तासमन्वितः ।
अग्नौ विशुद्धामादाय पुष्पकेण ययौ ततः ।। ४८

श शत्रून् हत्वाऽतिवेगेन पूर्वमागम्य राघवः ।
नन्दिग्रामे समादाय भरतं मित्रवत्सलम् ।। ४९

ष षाड्गुण्यसुगतिश्श्रीमान् राघवस्सह सीतया । षड्गुणस्सु
सङ्गतो भ्रातृभिस्सार्धं मातृभिस्स समागतः ।। ५०

स समेत्य हृष्टहृदयः पौरजानपदैस्सह ।
गवां शतसहस्राणि ब्राह्मणेभ्यः प्रदत्तवान् ।। ५१

ह हतशत्रुर्महेन्द्राण्या शतक्रतुरिवापरः ।
शतं वर्षसहस्राणां रामो राज्यमवासयत् ।। ५२

  

# अनुबन्धः

क्ष क्षत्रं ब्रह्माच्युतं जीयात् जीवनं जगतां परम् ।
ज्ञानानन्दमयं ज्योतिः ईळे तन्मातृकाक्षरम् ।। १
सपञ्चशतसाहस्रसंवत्सरसनातनम् ।
प्राङ्मातृकाक्षरैश्श्लोकैः सार्धपञ्चाशता स्थितम् ।। २
बलिद्वीपान्तरे लब्धं जानकीकविनिर्मितम् ।
रामेण संस्कृतं जीयात् श्रीरामायणमक्षरम् ।। ३
इदं बरोडानगरे राज्ञा मुद्रापितं पुरा ।
स्वीकृतं बालबोधार्थं बालिद्वीपप्रबन्धगम् ।। ४
नष्टवर्ण-विसंवादं शमयन् वर्णसङ्करम् ।
ऊप्लुतं ऌविकाराङ्कं अभेदं रलयोर्दशन् ।। ५
व्युदस्यन् क्वचिदेवात्र श्लोकलक्षणभञ्जनम् ।
ओं श्रीमदक्षरं रामायणमित्यभिधां दिशन् ।। ६
प्रथमाक्षरयोगेन मातृकाक्षरयोजनात् ।
षष्टिवर्णपरीवर्तात् नवत्यक्षरयोजनात् ।। ७
तत्र तत्र च संरक्षन् साभिप्रायं वचः कवेः ।
अष्टश्लोकीं ततः कुर्वन् रामस् संस्कृतवानिदम् ।। ८

**इतीदं अनुबन्धसहितं बालिद्वीपप्रसिद्धं**

## अक्षररामायणम्

  